# Shri Mahakala Kakaradi Ashtottarashatanamavali 108 Names

# श्रीमहाकालककाराद्यष्टोत्तरशतनामावलिः

## Document Information


Text title : Mahakala Kakaradi Ashtottarashatanamavali 108 names

File name : mahAkAlakakArAdyaShTottarashatanAmAvaliH.itx

Category : shiva, aShTottarashatanAmAvalI

Location : doc_shiva

Proofread by : PSA Easwaran psaeaswaran at gmail.com

Description/comments : See corresponding stotram. (Last two names are taken from Dhyanam)

Latest update : September 28, 2019

Send corrections to : sanskrit@cheerful.com




September 28, 2019

*sanskritdocuments.org*

# श्रीमहाकालककाराद्यष्टोत्तरशतनामावलिः

मन्त्रः -
“ह्रूं ह्रूं महाकाल ! प्रसीद प्रसीद ह्रीं ह्रीं स्वाहा ।”
मन्त्रग्रहणमात्रेण भवेत्सत्यं महाकविः ।
गद्यपद्यमयी वाणी गङ्गा निर्झरणी यथा ॥

विनियोगः -
ॐ अस्य श्रीराजराजेश्वर श्रीमहाकाल
ककाराद्यष्टोत्तरशतनाममालामन्त्रस्य श्रीदक्षिणाकालिका ऋषिः,
विराट् छन्दः, श्रीमहाकालः देवता, ह्रूं बीजं, ह्रीं शक्तिः,
स्वाहा कीलकं, सर्वार्थसाधने पाठे विनियोगः ॥

ऋष्यादिन्यासः -
श्रीदक्षिणाकालिका ऋषये नमः शिरसि । विराट् छन्दसे नमः मुखे ।
श्रीमहाकाल देवतायै नमः हृदि । ह्रूं बीजाय नमः गुह्ये ।
ह्रीं शक्तये नमः पादयोः । स्वाहा कीलकाय नमः नाभौ ।
विनियोगाय नमः सर्वाङ्गे ॥

करन्यासः एवं हृदयादिन्यासः -
ॐ ह्रां अङ्गुष्ठाभ्यां नमः, हृदयाय नमः ।
ॐ ह्रीं तर्जनीभ्यां नमः, शिरसे स्वाहा ।
ॐ ह्रूं मध्यमाभ्यां नमः, शिखायै वषट् ।
ॐ ह्रैं अनामिकाभ्यां नमः, कवचाय हुम् ।
ॐ ह्रौं कनिष्ठिकाभ्यां नमः, नेत्रत्रयाय वौषट् ।
ॐ ह्रः करतलकरपृष्ठाभ्यां नमः, अस्त्राय फट् ॥

ध्यानम् -
कोटि कालानलाभासं चतुर्भुजं त्रिलोचनम् ।
श्मशानाष्टकमध्यस्थं मुण्डाष्टकविभूषितम् ॥

पञ्चप्रेतस्थितं देवं त्रिशूलं डमरुं तथा ।
खड्गं च खर्परं चैव वामदक्षिणयोगतः ॥

विश्वतं सुन्दरं देहं श्मशानभस्मभूषितम् ।
नानाशवैः क्रीडमानं कालिकाहृदयस्थितम् ॥

लालयन्तं रतासक्तं घोरचुम्बनतत्परम् ।
गृध्रगोमायुसंयुक्तं फेरवीगणसंयुतम् ॥

जटापटल शोभाढ्यं सर्वशून्यालयस्थितम् ।
सर्वशून्यमुण्डभूषं प्रसन्नवदनं शिवम् ॥

अथ नामावलिः ।
ॐ कूं कूं कूं कूं शब्दरताय नमः । क्रूं क्रूं क्रूं क्रूं परायणाय ।
कविकण्ठस्थिताय । कै ह्रीं ह्रूं कं कं कवि पूर्णदाय । कपालकज्जलसमाय ।
कज्जलप्रियतोषणाय । कपालमालाऽऽभरणाय । कपालकरभूषणाय ।
कपालपात्रसन्तुष्टाय । कपालार्घ्यपरायणाय । कदम्बपुष्पसम्पूज्याय ।
कदम्बपुष्पहोमदाय । कुलप्रियाय । कुलधराय । कुलाधाराय । कुलेश्वराय ।
कौलव्रतधराय । कर्मकामकेलिप्रियाय । क्रतवे ।
कलह ह्रींमन्त्रवर्णाय नमः । २०

ॐ कलह ह्रींस्वरूपिणे नमः । कङ्कालभैरवदेवाय ।
कङ्कालभैरवेश्वराय । कादम्बरीपानरताय । कादम्बरीकलाय ।
करालभैरवानन्दाय । करालभैरवेश्वराय । करालाय । कलनाधाराय ।
कपर्दीशवरप्रदाय । करवीरप्रियप्राणाय । करवीरप्रपूजनाय ।
कलाधाराय । कालकण्ठाय । कूटस्थाय । कोटराश्रयाय । करुणाय ।
करुणावासाय । कौतुकिने । कालिकापतये नमः । ४०

ॐ कठिनाय नमः । कोमलाय । कर्णाय । कृत्तिवासकलेवराय । कलानिधये।
कीर्तिनाथाय । कामेन । हृदयङ्गमाय । कृष्णाय । काशीपतये । कौलाय ।
कुलचूडामणये । कुलाय । कालाञ्जनसमाकाराय । कालाञ्जननिवासनाय ।
कौपीनधारिणे । कैवर्ताय । कृतवीर्याय । कपिध्वजाय । कामरूपाय ।
कामगतये नमः । ६०

ॐ कामयोगपरायणाय नमः । कामसम्मर्दनरताय । कामगृहनिवासनाय ।
कालिकारमणाय । कालीनायकाय । कालिकाप्रियाय । कालीशाय ।
कालिकाकान्ताय । कल्पद्रुमलतामताय । कुलटालापमध्यस्थाय ।

कुलटासङ्गतोषिताय । कुलटाचुम्बनोद्युक्ताय । कुलटाकुचमर्दनाय ।
केरलाचारनिपुणाय । केरलेन्द्रगृहस्थिताय । कस्तूरीतिलकानन्दाय ।
कस्तूरीतिलकप्रियाय । कस्तूरीहोमसन्तुष्टाय । कस्तूरीतर्पणोद्यताय ।
कस्तूरीमार्जनोद्युक्ताय नमः । ८०

ॐ कस्तूरीकुण्डमज्जनाय नमः । कामिनीपुष्पनिलयाय ।
कामिनीपुष्पभूषणाय । कामिनीकुण्डसंलग्नाय । कामिनीकुण्डमध्यगाय ।
कामिनीमानसाराध्याय । कामिनीमानतोषिताय । काममञ्जीररणिताय ।
कामदेवप्रियातुराय । कर्पूरामोदरुचिराय । कर्पूरामोदधारणाय ।
कर्पूरमालाऽऽभरणाय । कूर्परार्णवमध्यगाय । क्रकसाय । क्रकसाराध्याय ।
कलापपुष्परूपकाय । कुशलाय । कुशलाकर्णये । कुक्कुरासङ्गतोषिताय ।
कुक्कुरालयमध्यस्थाय नमः । १००

ॐ काश्मीरकरवीरभृते नमः । कूटस्थाय । क्रूरदृष्टये।
केशवासक्तमानसाय । कुम्भीनसविभूषाढ्याय । कुम्भीनसवधोद्यताय नमः ।
(कोटि कालानलाभासाय नमः । कालिकाहृदयस्थिताय नमः ।)

इति श्रीमहाकालककाराद्यष्टोत्तरशतनामावलिः समाप्ता।

Proofread by PSA Easwaran psaeaswaran at gmail.com

*Shri Mahakala Kakaradi Ashtottarashatanamavali 108 Names*

pdf was typeset on September 28, 2019

Please send corrections to *sanskrit@cheerful.com*